ॐ

# ॥ ईशोपनिषद् भाष्यम् ॥

तच्च

न्यग्रोधपुर (बलसाड) वास्तव्य

ह्टोपाह मणिशङ्करात्मज नथिनशर्मणा, एम. ए. पदवीधारिणा

विरचितम् ।

संवत् १९७१, १९१५ ई० स०

मूल्यम् ०-२-६

# ISHOPANISHADBHASHYA

By

NALIN M Bhatt, M A

The Author of

*Nalini Parag ( Gujarati Kavya Sangrah )*
*Purushasukta Gujarati Bhashya ( Gujarati )*
*Sankhya Karikapradip Bhashya ( Sanskrit*
*Yogasutra Bhatta Bhashya etc. (*

[ 1991

Price 0-2-6

# अथार्पणम्

सुहृद्भूतैर्मातुलै रामचन्द्रै
र्दिष्टोऽसकृद्वाङ्मये प्रेमतन्त्रैः ॥
भूयात्तेषां, भाष्यशब्दार्थरूपैः
पूजा, रम्यामोदयुक्तप्रसूनैः ॥ १ ॥

सुभाष्यस्रगियंबद्धा प्रफुल्लैरर्थगन्धिभिः ॥
शब्दपुष्पैस्तयातुष्याद्द्विरेफो गन्धलिट्सुधीः ॥२॥

प्रत्यभिज्ञापयं भूयाद्भाष्य जन्मनि जन्मनि ॥
आवयोरिति देवेश प्रार्थयेऽहम्मुहुर्मुहुः ॥ ३ ॥

। भवदीय नलिन शर्मा ।

## ॥ अथ विशेषवक्तव्यम् ॥

भारतीयधर्मस्य द्वावंशौ सनातनतो दृश्येते । मन्तव्यांशोऽनुष्ठेयांशश्च । तत्रानुष्ठेयांशे तावत्कुत्रचिदपि विरोधो विलोक्यते । आनुश्रविककर्मकलापः सर्वैरेवानुष्ठेयो यथाधिकारम् । नहि वेदप्राप्तकर्मकरणे स्वातन्त्र्यमस्ति कस्यचिदपि । मन्तव्यांशे तु सर्वे स्वतन्त्राः । विविधा हि प्रतिपत्तयो विलोक्यन्तेऽत्रांशे । तथाच चार्वाकमारभ्य वेदान्तपर्य्यन्तानि सर्वाणि मतानि प्रचलितानि । आदेहवादादाऽऽत्मवादं मतवैचित्र्यं, पोषणं तत्सहिष्णुत्वञ्च च खलु गौरवास्पदम् । नहि भारतीयान् विहाय कुत्रचिद्दृष्टेयं सहिष्णुता, प्रज्ञास्वातन्त्र्यरुचिश्च । अतएव खलु कस्याश्चिदपि जाते प्रगतिः प्रज्ञाविकासविस्तम्भने । विचारस्वातन्त्र्यं हि ग्रामजातिदेशोन्नतिलिङ्गम् । अतिरोहितश्च भेदः सुधीनां स्वतन्त्रतास्वच्छन्दतयो । स्वातन्त्र्यं खल्विष्यते न स्वच्छन्दता ।

न च वाच्यं लोकायतिको निरङ्कुशो वेदान्ती च स्वप्रत्ययनेय इति । सर्ववादोपपादनाय हि जगति साधनान्युपलभ्यन्ते । ईश्वरनिराचिकीर्षुर्लोकायतिकस्तत्प्रतिपिपादयिषुश्च वेदान्ती स्वेष्टप्रमाणपुरस्सरावेव प्रवर्तेते । यो यच्छ्रद्धः स एव सः । सत्त्वानुरूपश्च सर्वस्य निर्णयः । यादृशी यस्य बुद्धिस्तादृशी तस्य चिन्ता । चिन्तानुकूलश्च तत्त्वविमर्शः । तदनुकारि च तस्य दर्शनम् । सत्त्वतारतम्येन तत्त्वनिश्चयतारतम्यमपि जायते । तथाच विवेकप्रकर्षे सत्या तत्त्वस्फुरणमपि विशदतरमविघ्नञ्च भवति । जगज्जीवेश्वरस्वरूपतत्त्वानितयस्यात्यन्तिको निर्णयो वेदान्तेषूपलभ्यते । विवेकपराकाष्ठामारूढा हि वेदान्तिनः । अतस्तेषां निर्णयोऽप्यास्थया गृह्यते लोके ।

एष चार्वाकवेदान्तिनौ तत्त्वज्ञानरेखाया अन्तिमौ बिन्दू। अभङ्गा हीयं सोपानपद्धतिस्तत्त्वज्ञानस्य। तस्याश्चार्वाकमतं पूर्वं वेदान्तमतञ्च पश्चिमं पदम्। निन्दन्तु चार्वाकं ज्ञाः स्तुवन्तु च वेदान्तिनम्। सत्यं तु तदवस्थमेव यन्नारोहति वेदान्तं चार्वाकमनारूढः। पूर्वं चार्वाकस्ततश्च वेदान्ती भवतीति क्रमोऽनुभवसिद्धः। देहधारी हि आत्मानं वेदान्ती। यो हि देहं तिरस्कुरुते न स आत्मानं विन्दते। यश्चात्मानं हिनस्ति न स प्रकृत्युत्थसुखं भुङ्क्ते। अभ्युदयमिति श्रेयसमुभयमपि हि प्राप्तव्यम्। तयोश्च विरोधएव नास्ति। अतएव ऋषिभिस्तादृशी जीवनसरणिरालेखिता ययोभयमपि सिध्येत्। कर्मज्ञानयोः क्रमसमुच्चयस्तेषामभिप्रेतः। देहादि निर्वर्त्यानि कर्माणि चित्तशुद्धिमुत्पाद्यात्मज्ञानयोग्यतामापादयन्ति। आत्मज्ञानाच्च मुक्तिः। आत्मज्ञानपथ्या हि किञ्च निखिलस्यापि कल्याणवृन्दस्य।

किञ्च। घोदुहितेव द्युमणेरात्मज्ञानस्य पूर्वगामिनी च भक्तिः। अनुभवात्किल ज्ञायते यन्नोदेति ज्ञानं भक्तिविरहे। भक्तिश्चमर्तेर्निरोहकर्मणः। अत एव कर्मभक्तिज्ञानानां सदैव साहचर्यम्। एकमप्यास्थितः सम्यक् त्रयाणां विन्दतेफलम्। विरोधकल्पनञ्च सम्प्रदायाकृष्टचेतसामनुद्धरसत्त्वानां संकुचितदृष्टिनाम।

सर्वथा कृते वेदोदितकर्मकरणपारतन्त्र्यमपि गूढाभिप्रायेण विहितम्। कर्मानुसारिणी हि बुद्धिरिति सर्वतन्त्रसिद्धान्तः। विधिदृष्टं कर्म संस्करोति व्यष्टिं समष्टिञ्च। संस्कृता चाभ्युदयमश्नुते। अभ्युदिताच तत्त्वज्ञानं लभते। तत्त्वज्ञानाच्च मुक्तिं सर्वथाऽतिकामितां विन्दते पर-

न्यर्येण । अतः कर्मानुष्ठानपारतन्त्र्यं निखिलस्यापिप्राणभृद्वर्गस्य श्रेयस्करं भवति ।

तदिदमात्मज्ञानं सर्वासामुपनिषदां विषयः । कलुषीकृतञ्चासां सिद्धान्तरहस्यं सम्प्रदायाकृष्टमानसैरियस्मन्मतिः । अतः साङ्ख्ययोगगीतादिसम्मिता मन्त्राणामन्तरङ्गसंगतिं सम्यग्विचार्योपनिषद्धार्दमाविष्कुर्महेऽत्र । यदत्रपूर्वाचार्यविसंवादीव भायात्तिरोभविष्यति तत्समाहितेन विमर्शेनेति श्रद्धाऽस्माकीनी । तथापि यदत्रस्खलनं स्यान्मतिमान्द्यप्रसूतं तत्क्षंस्यन्ते तत्रभवन्तो वेदसिद्धान्तवेत्तारः सूक्ष्मधियो विद्वांस इत्याशास्ते—

श्री कृ. एकादश्यां
मन्दवासरे
१९९१
शीतलामाता स्ट्रीट
यवतमाळ

विदुषामनुचरो
नलिनशर्मा ।



# ॥ ईशोपनिषद्भाष्यम् ॥

योगेश्वरमहं वन्दे कृष्णं तं पार्थसारथिम्।
येनोध्धृतो महामोहपङ्कमग्नो हि पाण्डवः ॥१॥
तं साक्षात्कृतधर्माणमपरं शाङ्करं महः।
प्रबोधोदयकर्त्तारं मुनिं वन्दे हरिं गुरुम् ॥२॥
प्रणम्य पितरौ प्रेम्णा भक्तिपूर्णेन चेतसा।
भाष्यकारान्हृदि ध्यात्वा, स्वविज्ञानविशुद्धये ॥३॥
ईशोपनिषदो भाष्यं यथामति करोम्यहम्।
तेनचान्तःस्थितो देवः प्रीयतां परमेश्वरः ॥४॥

हरि ॐ ॥ नमो भगवते वासुदेवायोपनिषद्गोदोग्ध्रे ॥

अनेकशाखोपशाखाप्रभिन्नासु नानाविधासु विद्यास्वध्यात्मविद्या, सर्वत्र श्रेष्ठा महत्तमफलदातृत्वादिति हि प्रसिद्धम्। श्रेष्ठत्वं चास्या मोक्षफलकत्वात्। मोक्ष हि फल तत्त्वसाक्षात्कारात्मिकाया अध्यात्मविद्यायाः। तच्च सर्वेभ्य फलेभ्य इतरविद्योद्भूतेभ्य श्रेष्ठ नित्यत्वात्सुदुर्लभत्वादतिशयत्वाच्च। तथाच याः काश्च विद्या अस्मिन् भूमण्डले प्राण्युपकाराय प्रवर्तिता सर्वभूतहितरतैर्महद्भिः सर्वास्ता अचिरस्थायिन्य-

सातिशयाश्च फलदृष्ट्योपायदृष्ट्या चाशुद्धिसम्भिन्नाः । नित्यनिरतिशयशुद्धसुखप्राप्त्यर्थं हि प्राणिनां चेष्टा । न च तादृशं सुखं कुत्र वर्तते कुतश्चान्वेष्टव्यमित्यस्य ज्ञानं सर्वेषामस्ति । सुखार्थमितस्ततो धावन्तो विविधोपायान् योजयन्तो मध्यएव कालमासतां नीयन्तो दृश्यन्ते । तानिमान् सर्वेषां प्राणभृतां स्वभावसिद्धां सुखलिप्सां वीक्ष्य, करुणैकनिष्ठया भगवन्तो वेदा, अनायासेनाल्पायासेन वा कथं तेषां तत्सिद्धिस्यादितिकृत्वा सनातनाविमौ द्वौ पन्थानौ प्रवर्तयामासुः । कर्ममार्गो ज्ञानमार्गश्च । उपायोपेयभावेन वर्तमानाविमौ द्वौ सर्वेषामविशेषेणाभ्युदयनिःश्रेयससाधकौ । तथाहीहामुत्र वाऽभ्युदयार्थं कर्म । यथायथाऽयं विहितकर्मकारी भवति तथा तथाऽभ्युदयोऽपि ध्रुव एवास्य । कर्मणैव-सताऽयं परो वा लोको जय्य । कर्मसु च सर्वासामप्यामभिन्नानां विधानां समावेशः । कर्ममूलश्चाभ्युदयो वरेण्यतरोऽपि फलदृष्ट्या क्षयी सातिशयोऽशुद्धश्च । तथा हि गृहपुत्रादिकं सुखसाधनमैहिकं स्वपुरुषकारेणार्जितमपि प्रध्वंसि । पुण्योपचयजितं स्वर्गमपि सावधिकम् । नापि परैश्वर्यमात्मनोऽधिकमामानं न दुःखयति । प्रायेण लोके तथैव दृष्टत्वात् । तत्राऽपि स्वतोऽधिकतरं सत्तासम्पन्नं शासितारं वीक्ष्य सासूयः सम्पद्यते । किञ्चाभ्युदयमूलेषु कर्मसु रागादिदोषाविद्धत्वमप्यस्त्येव । तद्दोषरहिता प्रवृत्तिरुपपद्यते कस्यचिदेव ज्ञानिनः । अतः कृत्वा कर्माणि विहितानि विचारशीलस्तेषां स्वभावं परीक्ष्य विरमति तेभ्यः । विरक्तश्चादुष्टसुखशोधनाय यतते । अदुष्टसुखोपलब्धिश्च परमात्मनि तिष्ठति । नह्यविदित्वा परमात्मानं सत्यसुखसम्पत्तिः सिध्यतीति भगवन्तो वेदास्तन्त्वैवोपयन्ति "तमेवविदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति ।

परमात्मनोऽनुभूतिश्च विवेकनिर्भरा । अतो देहादिप्रकृत्यन्तेभ्यः पदार्थेभ्य आत्मानात्मनस्तयोश्च परमात्मनो विविक्ताविविक्तज्ञानार्थं सर्वे वेदान्ताः प्रारभ्यन्ते । तत्र विहितकर्माचरणं चित्तशोधनद्वारेण परमात्मज्ञानसोपानं, न च तद्विरहे ज्ञानावाप्तिरितिकृत्वा, यजुर्वेदे नवत्रिंशदध्यायपर्य्यन्तं कर्माणि विहितानि। अथ वेदहक्कर्माचरणाच्छुद्धसत्त्वं, कर्मगतिषु विचित्रासु विरक्तमात्मनोऽन्यत्र आत्मानमपश्यन्तमात्मानुभवबुभुत्सुमात्मयाथार्थ्यं प्रस्फोटयति भगवान्वेदश्चत्वारिंशत्तमेऽध्याये । तमिमं यजुर्वेदस्य चत्वारिंशत्तममध्यायमीशोपनिषन्नाम्ना प्रख्यापयन्ति वेदविद्वांसः । इयं चोपनिषन्निखिलवेदान्तानां मूलं, बीजस्वरूपेण सर्वे वेदान्तसिद्धान्ता अस्यां ग्रथिता इत्याचक्षते परिणतधियो वेदविचारः । तामिमां स्वविज्ञानविशुद्ध्यर्थं हृदिम्ने च व्याख्यातुकामाय मह्यं सहायीभवन्तु गुरवः साक्षात्कृतवेदान्तार्थाः योगविद्वरिष्ठाः १०८ वैदिकमुनयः, उपतिष्ठन्तु हृदि प्रतिभापुञ्जैकमूर्तयो वेदान्तरहस्यविचारः शङ्कराचार्याः, उद्घाटयन्तु ज्ञानस्रोतः सर्वकामप्रदाः भगवन्तोऽन्तर्यामिणश्चेति ।

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्ति शान्ति शान्ति ॥

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥

पदार्थः-

ईशेति, ईश्शब्दस्य, ईश्धातोर्निष्पन्नस्य तृतीयान्तं पदमीश्वरेणे त्यर्थकम् । आवास्यम् आच्छाद्यम् । ईश्वरेण किमाच्छाद्यमित्याकाङ्क्षायामाह । इदं सर्वम्-प्रत्यक्षवाससर्वशब्दसान्निध्यात्सविकाराप्रकृतिः इदं सर्वमितिपदद्वयं स्वयमेव व्याख्याति वेद -यत्किञ्चेति । यत्किञ्च-यत्किञ्चित्; जगत्यां-पृथिव्यां-जगत्यामित्युपलक्षणं सर्वस्यविकारजातस्य । जगत्-गच्छतीतिजगत्-परिणामशीलमितियावत् । तथा चायमर्थः । हे अधिकारिन् ! प्रकृतौ यत्किञ्चित्परिणामशीलं स्यादिदंशब्दवाच्यं तत्सर्वमीश्वरेणाच्छादय । ईश्वरं सर्वत्राच्छाद किं त्वया कर्तव्यं यावदायुः ? इतिचेत् । तेन-ईश्वरेण, त्यक्तेन-दत्तेन ज्ञानप्रसादाख्येन परवैराग्येण, भुञ्जीथाः-आत्मानं पालयेथाः अन्यत्र मा गृधः-गृधिं तृष्णा माकार्षीः । अयमर्थः सर्वत्रेश्वरदर्शनाभ्यासिनस्तव चेद्व्युत्थानस्यात्समाधिच्छिद्रे नानादिवासनाया बलवत्वात्प्रकृते प्रलोभनं स्यात्तदा मागृधः-तत्र रत्नमये प्रलोभने गर्द्धीम कृथाः । गर्द्धानिवृत्तये त्वया किं भाव्यमिति चेत्कस्यस्विद्धनमिति । धनं-स्वं-प्रकृतिः कस्य-मम परमनेयं सविकाराप्रकृतिर्भूता भवति भविष्यति वा ? न कस्यापीय वशवर्तिनी नित्यस्थायिनीच । अतस्तृष्णे ! मुञ्चमामात्मप्रपन्नम् । एवं भावयतस्तव सर्वेऽनर्थाः प्रशान्तिमुपयास्यन्तीश्वरपरं ज्ञानं चादित्यवत्प्रकाशयिष्यति ॥ १ ॥

अथ भाष्यम्:—

हे भद्र ! साधुस्त्वया कर्माचरितं मयोपदिष्टम् । परीक्षितं च कर्मणां फलमानन्त्यमपर्यन्तजनिदायकम् । निरीक्ष्यच तेषा फल्गुतां

संशुद्धसत्त्वस्थमासादितज्ञानस्यसंशुद्धिमपराम् । अथाधिकृतस्त्वमात्म-ज्ञाने । एतदुपदिश्यात्वमात्मज्ञान इति वेदपुरुष आत्मज्ञान प्रदर्शयत्य-धिकृतेमुमुक्षवईशावास्यमित्यादिना ।

हे विरक्त ! समाधिनिष्ठ ! ईश्वरेण सर्वमाच्छाद्यम् । कोऽयमी-श्वरोमद्भिन्न इति चेन्मीमांस्यम् । क स्याद्योऽनन्तविस्तारां प्रकृतिमिमां प्रेरयेत् ? । ननु त्वं प्रकृतिप्रेरयिता । देहादिनियमनेऽप्यशक्तस्त्वं प्रकृतिं गुरुतरसरम्भां चालयिष्यसीतिरिक्त वचः । नैवस्वयं प्रकृतिः चेष्टावती । तस्या दृश्यत्वेन जडत्वात् । न हि जडे स्वतन्त्राप्रवृत्तिरुप-पद्यते । दृश्यते चेद विस्मयावहं जगन्नियमेन प्रवर्तमानमनिशम् । न हि तद्विलोक्यते यच्छासनमतिक्रामेत । जगद्विधरणहेतवो नियमाश्च-नियमदातारमनुमापयन्ति । योऽस्य जगद्विधरणहेतु स एव ईश्वरो-जीवप्रकृत्योर्नियन्ता तयोराधारश्च । शाब्दं च प्रमाणमस्त्येवेश्वरसाधकम् । ईश्वरपरा हि सर्ववेदा । भवति चायं प्रत्यक्षविषय समाधौ । अलौ-किकञ्च समाधिप्रत्यक्षम् । अतस्त्रिविधैरपिप्रमाणैरीश्वर प्रसिद्धः । आगमानुमानाचार्योपदेशादधिगतं त साक्षात्पश्येत् पुरुष । दर्शनं च तस्य न स्वरूपज्ञानं विना संभवति । किं स्वरूपं तस्य तर्हीतिचेत् ? शृणु । क्लेशकर्मविपाकाशयैरपरामृष्ट पुरुषविशेषईश्वर इति सम्पूर्णं लक्षण तस्य । अविद्याद्यभिनिवेशान्ता सावान्तरभेदभिन्नाः क्लेशाः पञ्च । क्लेशमूलानि शुभाशुभकर्माणि विविधानि । तेषां कर्मणांविपाको जात्यायुर्भोगः । विपाककृतवासनाश्चाशयः । अविद्यादिभिरपरामृष्टः—स्पृष्टः पुरुषेषु सदैव विशिष्टः सदैव मुक्तः सदैवोत्तमः पुरुष ईश्वरः । अविद्याविरहाद्रागादिविद्धकर्मरहितः ततश्च जात्यायुर्भोगशून्यः । अतोऽ-

स्मदादिवदेहेन्द्रियादिशून्यः । ज्ञानरूपत्वादानन्दरूपः । नहि ज्ञाने शोकसद्भावः । शोकस्याज्ञानमूलत्वात् । ईश्वरस्तु ज्ञानस्वरूपः । अतः सच्चिदानन्दरूपोदेव इति फलितम् । किञ्चान्यत् ? । सम्यग्ज्ञानं संपूर्णयोगाद्यनुष्ठानस्थिरताजन्यमस्मदादीनाम् । पुरुषविशेष वादीश्वरस्यतु तत्स्वभावसिद्धम् । अतः स्वरूपतोऽसंगोऽपि देवो भूतानुकम्पया सर्वकल्याणगुणसंपन्नो भवति । तथा च भगवद्भिर्वैरः सर्वभूतेषु प्रेमपूर्णोदयाररणालयश्च । अहिंसासिद्धावितरयोगाङ्गसिद्धीनामन्तर्भावात् सर्वसिद्धिमण्डितो देव इत्यत्रानुसन्धेयम् ।

तेनैतादृशेनेश्वरेण सच्चिदानन्दविग्रहेण सर्वमाच्छादयम् । अयं भाव । पूर्वं तस्य दर्शनं संपाद्यम् । योगसेवया सः साक्षात्कर्तुं पार्यते । तीव्रतमयोगसेवयाऽऽविर्भवतीश्वरः हृदयगुहायाम् । ईश्वरदर्शनाचास्मिता नंक्ष्यति । अविद्या च पलायिष्यति । ततश्चेश्वरं स्वयमेव सर्वत्र द्रक्ष्यसि । तदैवेश्वराच्छादनम् । जगति जगद्बुद्धिनाशसमकाल एवेश्वरबुद्ध्युदय आच्छादनमीश्वरस्य ।

एवमीश्वरदर्शनस्तन्त्यता प्रदर्श्य, न हि सर्वेषां तद्दर्शनं सहसा भवतीति मनसि विचार्य, परवैराग्यपराकाष्ठा कर्मस्यादर्शनेपराश्मदर्शनं तद्दर्शयति कृपया । तेन त्यक्तेनभुञ्जीथा इति । योगाभ्यासकाले तत्स्थैर्यकन्ध्यर्थंच तेनेश्वरेणभक्तिप्रमादितेन, त्यक्तेन—दत्तेन ज्ञानप्रसादात्येन परवैराग्येणामान भुञ्जीथाः पालयेथाइति । "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते" ति योगेश्वरोक्तेः ।

अनुभवबलाच्च । परवैराग्यं हि वज्रादपि कठिनतमं संसृतिदुःखापहारकं दुर्भेद्यं कवचम् । साधकः परवैराग्यसन्नद्धः सततमात्मानं संरक्षेत् । मृदुपरवैराग्यभेदिका च तृष्णा प्राकृती । या किल वशीनमपि स्वमार्गाच्च्यावयति । अतः परमार्थमार्गयात्रिणं मध्य एव चेतयति भगवान्वेदः । हे सुभद्रश्रवः । मा गृधः । यदा कदाचिद्व्युत्थितचित्तोभूया—प्रकृतिश्च त्वां सर्वस्वजिहीर्षुमातृष्यावतिरमणीयप्रलोभनेन, तदा मा गृधः तृष्णां मा कार्षीः तद्विषयाम् । पुनरनिष्टप्रसङ्गात् । कथं वार्या तृष्णेति चेदनया भावनया । कस्यस्विद्धनमिति । कस्य मम परस्य वेदं धनं प्रकृतिरूपम् ? । हे मातः प्रकृते ! दृष्टासि मया । नावयोरस्ति कश्चित्सम्बन्धः । कथं मां लोभयसि ? । मुञ्च माम् । एवं भावयतः पुनरपि समाधिरूपस्थास्यति । परमात्मप्रतिष्ठश्च भविष्यसि न ततः पुनरागमिष्यसि । परमात्मनिष्ठा च मोक्षः । अतस्त्वं विमोक्ष्यस इति ॥ १ ॥

एवं प्रथमेमन्त्रेपरमात्माऽक्षय्यसुखराशिर्ज्ञानलभ्यश्चेति साधितम् । ज्ञानलभ्यश्चेदीश्वरः कुतः कर्माडम्बरः ? । न हि बह्वायाससाध्यानि कर्माणि वृथा सेव्यानि । एवं चेच्छङ्कसे न त्वयावेदराद्धान्तः सम्यग्ज्ञातः । न हि कर्माणिवृथा विहितानि । कर्मकुर्वत एव दीर्घकालानन्तरं ज्ञानेऽधिकारः सम्पद्यते । न हि स्थलरतः ज्ञानेऽधिक्रियते । स्थानं हि जाड्यं तमोमूलम् । ज्ञानञ्चसत्त्वादाविर्भवति । सत्त्वतमसोश्च विरोधः । अतः सत्त्वोद्रेकाय स्थैर्याय च कर्माण्येव कर्तव्यानीतिविधत्ते ।

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥२॥**

पदार्थः—

कुर्वन्–निर्वर्तयन्, एव–अनेन फलाभिसन्धि प्रतिषिध्यते। इह–अस्मिन् कर्मभूमौ देहे, कर्माणि–सर्वाणि कर्तव्यानि। शतसमाः–यावदायुः, जिजीविषेत्–जीवितुमिच्छेत् पुरुषः। एव–उक्तप्रकारेण निष्कामतया कर्माणिकुर्वन् वर्तमाने त्वयि नरे, कर्म–कर्मफलजालमायुभोगलक्षणं न लिप्यते–न सज्जते–न बन्धकं भविष्यति। इतः–फलाभिसन्धिरहितात् कर्मयोगात्, अन्यथा–भिन्नः–इतरः कर्मनिर्लेपसम्पादक उपायान्तरो नास्ति। तथाच फलाभिसन्धिरहितानि कर्माणि कुर्वता त्वयाऽनुष्ठातव्यम्। नहि निष्कामकर्मकरणादन्योपायान्तरोऽस्ति येन कर्मलेपं त्यक्ष्यसि। अतः कुरु कर्माण्यसक्ततया यथाशक्तीति ॥२॥

अथ भाष्यम्:—

ज्ञानमाहात्म्यमुपवर्णितम्। अथ ज्ञानसाधनं कर्म स्तौति। नहि कर्माणि मुधा विहितानि। नापि ज्ञानकर्मणोर्विरोधो विद्यते। सत्यमनयोः समसमुच्चयोऽशक्यस्तथापि क्रमसमुच्चयस्त्वस्त्येव। स एव चात्रोपदिश्यते। नहि वेदाः कर्माणि प्रतिषेधयन्ति। अपि त्वासक्तिं निषेधयन्ति। रागारागयोर्विरोधः। न तु ज्ञानकर्मणोः। दोषविद्धान्येव निखिलानि कर्माणि निपुणैरपिनिर्वर्तितानीति चेन्न। लोकसंग्रहदृष्ट्या कृतानि कर्माणि निर्दोषाण्येव भवन्ति। नो चेत् कथं पूज्यपादैः शङ्कराचार्यैर्निःस्पृहैः परोपकरण एव नीतम्। ज्ञानमार्गपुरस्कर्तार इमे महात्मानः क्षणमपि न स्थातुमिच्छन्ति। अतो न कर्माणि ज्ञानविरोधीनि। अपितु ज्ञानसचिवानि। अतएव स्पष्टमादिशन्ति भगवन्तो वेदाः श्रेयस्कामः पुरुषः कुर्वन्नेवेत्यादि। इह कर्मभूमौ कर्माणि निर्वर्त-

यत्नेन यावदायुस्त्वया सेवितव्यम् । नच कृतेषु कर्मसु फलदृष्टिर्विधातव्या। यतः फलेसक्तः कामकारेण निबध्यते जन्तुः । निष्कामकर्मसेविनस्तव समस्तकर्माणि शुष्केन्धनकल्पानि भविष्यन्ति । समिद्धेन ज्ञानस्फुलिङ्गेन समतायोगोत्पादितेन च सपदि भस्मत्वं प्रयास्यन्ति । अतस्त्वं योगं गीतोपदिष्टमातिष्ठ । एवं कुर्वति त्वयि कर्मलेपो न भविष्यति । इतः कर्मयोगादितरो मार्ग एव नास्ति येन त्वं कर्मबन्धनं त्यक्ष्यसि । ऋते च कर्मवीर्यशैथिल्यान्नज्ञानोदयः । ज्ञानविरहे च न ध्रुवसुखाप्तिः । अतस्तात ! कर्माण्यातिष्ठ ॥ २ ॥

अथ येषाञ्चेतसि नैष्कर्म्यस्य विपरीतोग्रहो दृढीभूतो, ये च कर्माणि सत्त्वशोधकानि निन्दन्ति तान्प्रत्याह:—

## असूर्य्या नाम ते लोका अन्धेन तमसावृताः ।
## ताँस्ते प्रेत्याभिगच्छन्ति येकेचात्महनोजनाः ॥३॥

**पदार्थः—**

असूर्य्याइति, सूर्य्याः—विद्वत्प्राप्याः; असूर्याः—अविद्वत्प्राप्याः । नाम—प्रसिद्धा—प्रत्यक्षदृष्टाः, ते लोकाः—लोक्यन्ते—दृश्यन्ते—भुज्यन्ते कर्मफलानीतिलोकाः—देहाः—योनिविशेषाः; कीदृशास्ते ? । अन्धेन तमसाऽऽवृताः—गाढेन तमसा—अज्ञानेन, आवृताः । तान्—लोकान्—निकृष्टयोनिविशेषान्, ते—अगाढाज्ञाननिम्नाः जनाः—मानवा—जीवाः येके—येकेचन, च—यत् । आत्महनाः—आत्मघातिनः—विहितरीत्या कर्माकुर्वाणा ततश्चात्मनि प्रतिपलमविद्यासमुद्भयन्तस्ततश्चात्मानंशुद्धं मलीमसमिव कुर्वाणा आत्मानं सन्तं तिरस्कुर्वन्ति, अतस्त आत्महनाः

इति कथ्यन्ते । ते प्रेत्य—वर्तमानं देहं परित्यज्य अभिगच्छन्ति—प्राप्नुवन्ति । तथा च येकेचन जीवा आत्मघातिनः स्युस्त इतः प्रेत्यतॉल्लोकान् प्राप्नुवन्तियेऽविद्याप्राप्याः गाढाज्ञानपरिपूर्णाः सन्ति ।

अथ भाष्यम्ः—

संकोचितहस्तपादादिकेन्द्रियं पुरुषं, नैष्कर्म्यस्य परां कोटिं प्राप्तं, परप्रत्ययनेयाः पुरुषा मन्यन्ते । न च कर्माकरणान्नैष्कर्म्यं सिद्ध्यति । कर्मैव कुशलं नैष्कर्म्यस्य हेतुः । यो हि विनैव विहितकर्माचरणमिन्द्रियाणि प्रपीड्य, "सिद्धा मे निष्कर्मता, किंमे प्रयोजनं कर्मभि" रिति मत्वा जडायते, तं प्रति श्रुतिराह 'अन्धंतम' इत्यादि । हे क्षुद्र ! शृणु । ये के च पुरुषा इह तमोऽभिभूता अकर्मण्या भवन्ति तेऽन्धं तमो व्रजन्ति । कुतः ? । यतस्त आत्मघातिनः । आत्मघातश्च न वस्तुतः, तस्य नित्यत्वात् । तथापि स्वतः शुद्धमात्मानमुपकर्माचरणैस्ते मलीमसं कुर्वन्ति । कर्मसामर्थ्याच्चोच्चावचप्रपञ्चेषुप्राप्यते तैरात्मा । यदिदं नित्यस्यात्मनः संसृतिचक्रे प्रक्षेपणं तदेवात्मनो घातः । सकामकर्मभिश्चात्मा' देहाद्देहं व्रजति । आत्मनः सृतिवारणं च निष्कामकर्मनिबन्धनम् । तच्चेशाऽऽज्ञामूलम् । अहिंसादयः कर्माणि चेश्वरविहितानि । तानि हि चित्तशुद्धिं सम्पाद्य पुरुषं चरमसर्गेऽधिकारं प्रापयन्ति । अतोऽन्धात्तमसश्चेन्मुक्तिं कामयसे मा हिंसीरात्मानम् । प्रसादयैनं शुक्लकर्मभिर्फलाभिसन्धिवर्जितैः । नोचेद् ध्रुवं ते सद्गमोऽविद्याप्राप्येयोनिविशेषैः स्थावरीन्तैः । अतो द्वितीयमन्त्रप्रोक्ते कर्मण्येव तेऽधिकारइति ॥ ३ ॥

भगवतो वेदस्योपदेशं कर्णाकृत्य कश्चिदधिकारसम्पन्नः शुद्धसत्त्वः पुरुष आत्मनः स्वरूप जिज्ञासते । तं प्रत्याह

## अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

पदार्थः—

तदात्मतत्त्वमनेजत्—एजृ कम्पने—कम्पनं स्वरूपच्युतिः—विकारशीलत्वम्—धर्मादिपरिणामत्रयग्रस्तत्वम्—तद्रहितम् अपरिणामीति यावत्। अत एवैकम्—अमिश्रितम्—आनन्दास्तत्त्वपर्यन्तमूतेषु सर्वेषां शुद्धम्। सर्वव्यापि वा मनसः द्रुततरादपि जवीयः—जववत्तमं—द्रुततमम्। एनत्—प्रकृतमात्मतत्त्वं देवाः—विषयप्रकाशकत्वाद् देवा इन्द्रियाणि, नाप्नुवन्—न जातु प्राप्नुवन्ति। कुतः? पूर्वम्—प्रथमतः अर्शत्—गतम्—ज्ञातम्—इन्द्रियाणि यथास्वं विषयग्रहणशक्तिदातृत्वेन। तत्—आत्मतत्त्वम्; धावतः द्रुतगच्छतः, अन्यान्—मनःप्रभृतीन् अत्येति—अतीत्यगच्छति, तिष्ठत्—स्वयं अगत्वैव। तस्मिन्—आत्मतत्त्वे सत्याधारभूते मातरिश्वा—वायुः—कारणे कार्यप्रयोगात्, प्रकृतिः, अपः—कर्माणि जगत्प्रसवकारीणि—जगद्गर्भमिति सक्षेपं दधाति—धारयति

अथ भाष्यम्:—

तात! आश्चर्यावहमिदमात्मतत्त्वम्। कृत्स्नं जगत् परिणामत्रयग्रस्तम्। नचेदं तथा। इदं ह्यपरिणामि। अपरिणामित्वादेवैकम्—अमिश्रितम्। आत्मभिन्नं हि निखिलमशुद्धम्—मिश्रितम्। नहि तद्वस्तु यत्संघातयुक्तं न स्यादृते चितेः। चिद्धातुरेवामिश्रितः। स पुनर्मनसो

जवीयः । निष्क्रियमात्मतत्त्वं जवीयश्चेति विरुद्धमुच्यते । न । नेदं स्वरूपतश्चलम् । उपाधितस्तु भवति । जलसंक्रान्तचन्द्रबिम्बवत् । यत्र क्वचिन्मनः पतति तत्रात्मा पूर्वत एव गतो व्यापकत्वात् । आत्मतत्त्वं पुनर्नेन्द्रियग्राह्यम् । इन्द्रियग्राह्यत्वे तस्य जडत्वापत्तिः । ततश्चात्मनश्चेतनस्याभावः प्रसज्येत । तथा चात्मस्वरूपप्रतिपादने बद्धपरिकराः सर्वे वेदान्ता मोघाः वञ्चकाश्च स्युः । वेदाश्च परमाप्ताः । न च प्रसिद्धस्यात्मनोऽपलापो योग्यः । अतोऽतिसूक्ष्ममात्मतत्त्वमिन्द्रियेभ्यः परम् । न चाभासोऽप्यस्येन्द्रियाणि ग्रहीतुं शक्नुवन्ति । अपि च निरुद्धसर्वेन्द्रियव्यापार एव पुरुष आत्मदर्शनाय प्रभवति । कुतोऽग्रहणमात्मन इन्द्रियैः ? यतस्तत् पूर्वमर्षत् । तदात्मतत्त्वं सर्वतः पूर्वम् गतम् ज्ञातमिन्द्रियेभ्यो यथार्थं शक्तिप्रदातृत्वेन । न हि ग्रहीतुर्ग्रहीतिर्ग्रहणैः । अग्राह्योऽयं ग्रहीता स्वयं तिष्ठेद्वेव—अविक्रिय एव । विरुद्धमुपदिश्यत इतिचेत् ? किमत्र चित्रमिव पश्यसि । शैलीयमुपनिषद्दृष्टॄणाम् । आत्मतत्त्वं खलु स्वरूपतः सर्वधर्मवर्जितमुपाधितस्तु तस्मिन्विरुद्धधर्मोऽप्यापाततः उपपद्येरन् । अतो नात्र किमप्यसमञ्जसम् । तदिदमात्मतत्त्वं पुनरव्यक्ततया प्रकृतिप्रेरकमिति कथयति तस्मिन्नप इत्यादिना । तस्मिन्नात्मतत्त्वे सतीक्षमाणे मातरिश्वा—प्रकृतिरपः संसृज्यमानप्राणिकर्माणि दधाति—धारयति । जगद्बीजं च कर्म । तं बीजं विस्तारयति फलपर्यन्तं प्रकृतिरीश्वरेच्छया । "मयाध्यक्षेण प्रकृतिः सूयते सचराचर" मिति योगराट्कृष्णः । तथा चापरिणामि, सर्वव्यापि, शुद्धमनिन्द्रियग्राह्यं चेतनं जगतो निमित्तकारणमित्यायातम् ॥ ४ ॥

शुद्धं चेतनं जगतः कारणमित्युक्त्वा, सम्प्रति जगन्निर्माणं न

ययेच्छं करोत्यपितु जीवकर्मसापेक्षमितिदर्शयतीश्वरस्य कर्मफल-नियन्तृत्वात्:-

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तोऽस्यसर्वस्य तदुसर्वस्यास्य वाह्यतः ॥ ५ ॥

पदार्थः-

तत्-प्रकृतमात्मतत्त्वम् । एजति-कम्पयति-कर्मानुसारं जीवं देहाद्देहं चालयति-प्रापयति । तत् न एजति-जीव ससृतिचक्रे भ्रामयत्नीश्वरस्तेनकर्मणा बध्यते न वेत्याकाङ्क्षायामाहतन्नैजतीति । तेन कर्मणा तदात्मतत्त्व स्वयं न चलति-न स्वात्मस्थितिभ्रष्टमवति । तत्र तस्योदासीनत्वात् । नहीश्वरकर्माणि रागद्वेषानुविद्धानि येन तस्यापि बन्धः प्रसज्येत । तत् पुनः दूरे-शुद्धान्तःकरणप्राप्यत्वादविदुषा क्लिष्टकर्मणा कृते दूर एव वर्तते । तत् उ-तु पुनः, अन्तिके-अन्तर्यामित्वाद्भावितात्मना कृते स्वात्मनोऽपि समीपे तद्वर्तते । तत् अस्य सर्वस्य जगतोऽन्तः, तच्च सर्वस्यास्य वाह्यतः-अन्तर्बहिर्निरन्तर, चेदमात्मतत्त्वमिति ॥

अथ भाष्यम्:-

तिष्ठेन्मन्यसे भ्रान्तोऽसि । आवृतज्ञानोऽसि । महीश्वरो मन्यते कमपि स्वकर्मकरणे । अजस्य तस्य प्रवृत्तिः । न च लोकस्ता मनागपि जानाति । गहना हि तस्य गतिः । न च लिप्यत ईश्वर प्रवृत्तिभिः । असङ्गत्वात् । नहास्मदादिवत्तस्य दुष्टप्रवृत्तिः । अतस्तत्तत्तस्ताचर्वं नैजति-स्वतो न विकारीभवतीति । तत्पुनः निष्क्रियाणां कृते दूरम् । नहि स्थानरताः पुरस्तात्पश्यन्ति । निष्कामकर्मयोगिनस्तु तदन्तिके स्वात्मनोऽपि समीपे निभालयन्ति । यतस्तत्सर्वान्तर्यामी ॥ ५ ॥

यथा च निर्णीतमात्मतत्त्वं साक्षात्कार्यं यच्च साक्षात्कारस्यफलं तद्दर्शयति:—

## यस्तु सर्वाणिभूतान्यात्मन्येवानुपश्यति ॥
## सर्वभूतेषुचात्मानं ततो न विजुगुप्सते ॥ ६ ॥

पदार्थ.—

तु—परन्तु, यः—ज्ञानप्रसादेन विशुद्धसत्त्वो यः कश्चित्पुरुषः, आत्मन्येव एव—परमात्मन्येव न तु ततः पृथक् । सर्वाणिभूतानि—आत्मस्तम्बपर्यन्तानि विश्वानि भूतानि, अनुपश्यति—गुरुणोपदिष्टेन वर्त्मना साक्षात्करोति । च—तथा, आत्मानं—स्वां निजात्मा चिदेकरसः सर्वोपद्रवरहितः कोप्यऽपूर्वसुखराशिः प्रियतमस्तथैव पिपीलिकादिक्षुद्र-तमजन्तुमारभ्य ब्रह्मापर्यन्तेषु सर्वेषुभूतेषुनिगूढ आत्माऽविचिदेकरसः साक्षी चेतयिता केवलोनिर्गुणश्चेत्येवमात्मानं प्रपश्यति । तदा ततः—सर्व-भूतात्मभूतात्मदर्शनजदृष्टिमाहात्म्यात् विजुगुप्सते—न घृणां करोतीति । ६ ।

अथ भाष्यम्:—

समतायोगोऽत्रोपदिश्यते। आत्मौपम्येनात्र सर्वत्र समदर्शनं स्तूयते। यथाममात्मा संघातेश्वरो देहादिवुभ्यस्तेभ्यः पदार्थेभ्यः स्वरूपतोधर्मतश्चभिन्नो न मनागपि तयोः संभेदस्तथैव सर्वेषां भूतानामात्मा। यथा च ममात्मा परमात्मनिप्रतिष्ठितस्तस्मिन्नपरं सुखगुणमुञ्ञानस्तिष्ठति सर्वेषामात्माऽपि तथैव। न हि श्रुते परमात्मनः कुत्रचिदस्य सर्वस्य प्रतिष्ठा। सर्वेषुभूतेष्वात्मान निरतिशय पश्यामि। न च क्षुद्र आत्मा पिपीलिकाया महाँश्चेन्द्रस्य। सर्वत्रैकरूप आत्मा। अत एव न घृणा-मनोत्पद्यते। कुत्र विजुगुप्सेयम्?। सर्वा हि जुगुप्सा सातिशयत्वे-संजायते। न चाहमात्मनिष्ठोऽन्यस्तु परनिम्नोऽतोमत्तो निकृष्टस्त्वपि तिष्ठति। यो हि भेदोऽवभासतेऽज्ञानकृतः सः। अहमपि चेदिमं भेदं प्रत्यवेक्षेयं को विशेषो मम कृपणस्य च?। अहो दुष्टताया अभावादोषदृष्टिरेव विलीनाति। ततश्च—

**विद्याविनयसम्पन्ने ब्राह्मणे गविहस्तिनि॥**
**शुनिचैव श्वपाके च पण्डिताः समदर्शिनः॥**

इति योगेश्वरोक्तिरवितथेतिसिद्ध्यति॥ ६॥

अथात्मनिष्ठाया. संसारोच्छित्तिं प्रदर्शयति:—

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कः शोकएकत्वमनुपश्यतः॥ ७॥**

पदार्थः—

यस्मिन्—परमात्मनि, विजानतः—आत्मतत्वं विशेषरूपेण निर्वि-

चिकित्सतया साक्षात्कुर्वत. पण्डितस्य यदा सर्वाणि-अव्यक्तादिस्था-वरान्तानि भूतानि, आत्मैवाभूत्-परमात्मतयैवदृष्टानि भवति। तत्रैकत्व मनुपश्यतः। को मोहः? कः शोकः?-तत्त्वदर्शनादविद्याविच्छित्तौ, तन्मूलौ मोहशोकावपिनैवभवतः।

अथ भाष्यम् —

यदा स्वात्मानं परमात्मप्रतिष्ठं पश्यन् सर्वाणिभूतान्यपि परमात्म निष्ठानि पश्यति तदा सर्वेषाभूतानां परमात्मतयैकत्व पश्यतस्तस्य पुरु षस्य विगलिताविद्यामलस्य को मोहः कः शोकश्चाविद्योऽथः? । आक्षे पेण मोहशोकयोरविद्यासत्तयोरभावमेव दर्शयति ॥ ७ ॥

अथ लब्धपरमात्मदर्शनपुरुषप्रच्छा परमात्मनः स्वरूप विवक्तिः—

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं
शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्य-
दधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

पदार्थः—

सः-विशुद्धचित्तसत्त्वः पुरुषः पर्यगात्-परित-परमपुरुषमजा-नत्। किं स्वरूप तस्य परमपुरुषस्येत्याकाङ्क्षायामाह शुक्रम्-सदीश्वरतावद्योतिमत्-चैतन्यस्वरूपम्। अकायम्-कायरहितम्-लिङ्ग शरीरवर्जितम्। अव्रणम्-अक्षतम्, अस्नाविर-स्नावा शिरा-ताभिः रहितम्-तथा च स्थूलदेहरहितम्। शुद्धम्-अविद्यामलरहितम्-कारण

शरीरद्वयमिति। कथं त्रिविधशरीररहितं तदितिचेज्ज्ञानस्वरूपत्वात्। अपापविद्धम्–पुण्यापुण्य उभयेऽशुद्धत्वाद्विवेकिनः पापम्–शुभाशुभकर्मविद्धमिति। स पुनरीश्वर कविः–सर्वज्ञः, मनीषी–अन्तर्यामी, परिभूः–परितो भवतीति परिभूः, तेन तेन रूपेण स्वयमेव लीलार्थमाविर्भवतीति। स्वयंभूः–कारणान्तरानुपपत्तेरिति। शाश्वतीभ्यः समाभ्यः –अनादितः, याथातथ्यतोऽर्थान्–यादृशाः पदार्थास्ते तादृशान् एव, व्यदधात्–विशेषेणाकरोदिति॥

अथ भाष्यम्:—

ईश्वरतत्त्वप्रद्योतकोऽयं मन्त्रो गम्भीरार्थगोपकः। अत एव निदिध्यासितव्यो मुमुक्षुभिः। पूर्वस्मिन्मन्त्रे सर्वात्मदर्शनं प्रदर्श्य, तद्वतः पुरुषस्येश्वरानुभवस्तत्तदवस्था च दृष्टिरत्र प्रदर्श्यते। स पुरुषः परितस्तमीश्वरमपश्यत्। किं स्वरूपं तस्येति पृष्टः शुक्रमित्यायभिदधाति। प्रदर्शितं चास्माभिरीश्वरस्वरूपमत्रोपदिष्टं प्रथमे मन्त्रे विस्तरेण। अथो-त्पन्नेश्वरदर्शनः पुरुषः किं मनुते तदभिहितं "याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः" इतिमन्त्रभागेन। नहि तादृशः पुरुषः कुत्रापि कथङ्कार प्रयुङ्क्ते। कथङ्कारस्य रागद्वेषानुपूर्वकत्वात्। कथं मे दुःखं कथं च न सुखमित्येषा पृच्छाऽज्ञाननिम्नस्य पुरुषस्य। नहि-विगलितदोषः पुरुष ईश्वरं दूषयति स्वप्नेऽपि। भुनक्ति च यदृच्छाप्राप्तं विनैव रागद्वेषम्। जानाति सो नहि निस्तारः ऋते प्रारब्धकर्मणः क्षयात्। मयैव जन्मजन्मान्तरे स्वर्जितं कर्म। कथं ततो विनैव भोगं मुक्तिं काङ्क्षेय। ईश्वरोऽपि तादृशं पुरुषमनुगृह्णाति तितिक्षादानेन। ईश्वर-

प्रसादेन चाक्षीणभोगेकर्म क्षपयित्वा वैष्णवीं पदवीमारोहति। अतउक्तं याथातथ्यतइत्यादि। ईश्वरश्चेत् स्वभक्तमनुगृह्णीयात् स्वपराङ्मुखं च निगृह्णीयात्र स ईश्वरोऽपि तु पामरः। ईश्वरस्तु

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥

इति न्यायेन न विषमो नाऽपि निर्घृणः। कर्मसापेक्षा तस्य प्रवृत्तिः। अतः कर्मानुसारेणैव सर्वं सो व्यदधादिति युक्तं वच। अतः सुखं मे स्याद् दुःखं वा न तत्रेश्वरस्य दोषः। एवमनसूयः प्रारब्धक्षय प्रतीक्षते। क्षपयित्वा च सता संपद्यते॥ ८॥

अथ कर्मशून्या विद्यामपरोक्षा, विद्याशून्यं च कर्म बन्धावहं ये सेवन्ते तान्परमार्थभ्रष्टान् कृपया सन्मार्गं दर्शयति श्रुतिः—

×अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो यउ विद्यायां रताः॥९॥

पदार्थ —

ये—ये मानवाः, अविद्याम्—क्लेशजननीं क्लिष्टकर्मलक्षणामुपासते—सेवन्ते, तेऽन्धं तमः—गाढमज्ञानं प्रविशन्ति—प्रतिफलं ऋच्छन्ति। ये उ—पुनः; विद्यायां—कर्मभूमिमनारूढायां रताः—सक्ताः ते ततः—अविद्योपासकेभ्य अपि भूयइव तमः—गाढतरमन्धकारं प्रविशन्ति॥

× अत्र तु विद्यानन्द उपासितकर्मेत्यन्य आचार्याः॥

अथ भाष्यम् —

सर्वेण कर्मणा ज्ञानपरिसमापिना भाव्यम् । यत्कर्म ज्ञानान्न स्यात्तत्कर्मापि तु विकर्माकर्म वा स्यात् । अतो ये पुरुषा अविद्यामेव सर्वेष्वप्रबुद्धया भजन्ते तेऽन्धतमो व्रजन्ति । अतिपामरमुद्दिश्येदमभिहितम् । अविद्यायामेव लुठन्तो दृश्यन्ते प्रायेण जना जगत्यविद्यामेव च सर्वस्वमाप्तिं मन्यमानाः । अविद्योपास्ते फलं च प्रत्यक्षम् । अविद्याया अविद्यासन्ततिरिव प्रोद्भवति । अविद्यासन्ततिश्च जायायुभोगः । सचान्धकारेणैवाज्ञानान्धकेनावृत । न हि पामरो जन्तुरविद्योच्छेदनाय प्रभवति । अत उक्ता ये मानवा प्रतिपक्षमविद्यामेव सेवन्तेऽविद्यामेव ते र्जन्ति । किञ्चान्यत् । दृश्यन्ते लोके मानवा, रसनाप्रवर्तितशास्त्रग्रन्थाः केवलकर्मस्वेव रताः पण्डितम्मन्यमानाः । पठन्ति ते शास्त्राणि । उपदिशन्ति चेतरेभ्यः शास्त्रतत्त्वं स्वयं च शास्त्रतत्त्वपराङ्मुखाः । दर्वीव रसकरसं, विद्यारसं, निमज्जतोऽपि रसं, न हि दत्ते । तानधिकृत्य मन्त्रस्योत्तरार्धप्रवृत्तिः । ये पुरुषा विद्यायां रता अपि कर्मयोगमनारूढाः सन्ति तेषां गतिरविद्यानिम्नेभ्योऽपि क्लिष्टतरा । आत्मप्रवञ्चकास्ते दाम्भिका कृच्छ्रमेव प्राप्नुवन्ति । भूतवञ्चनं हि महत्पापम् ॥ ९ ॥

विद्याविद्ययोः संसाधिक फलं प्रदर्शयति दशमे मन्त्रे —

**अन्यदाहुर्विद्ययाऽन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां येनस्तद्विचचक्षिरे ॥१०॥**

पदार्थः—

अन्यत्–भिन्नं फलम् विद्यया भवतीति प्राचीना ऋषय आहुः। अन्यत्–भिन्नं फलं; अविद्यया भवतीति च त एव प्राहुः। तत्–फल-भेदं ये धीरास्ते नः–अस्माकं विचचक्षिरे–प्राहुः। तेषां धीराणां सकाशात्; इति–एवं शुश्रुम–वयंश्रुतवन्तः।

अथ भाष्यम्:–

यादृशं फलमेते पण्डितंमन्या अश्नुवते ततोभिन्नमेव फलं भवति सम्यगुपसेवितया विद्यया। विवेकप्रत्ययो हि विद्याफलम्। शास्त्रज्ञा अपि विवेकशून्या एते। अतः शृणुत रे मानवाः! भिन्नमेव फलं विद्यायाः। मा पतंतैषां बालानां विस्तृते वाग्जाले। अविद्ययाऽपि भिन्नमेव फलम्। तथाहि कर्मस्वपि भेदः। राजसतामसकर्माणि सात्त्विककर्मभि-रभिभूयन्ते। ततश्च चित्तशुद्धिर्भवति। तथापि क्लिष्टकर्माण एव दृश्यन्ते मानवाः। अतो हे मनुष्याः! कर्मसु विवेकं कुरुत। तमिमं फलभेदं परम्परागतं स्वानुभवसिद्धं च व्याख्यातः। अतः श्रद्धधीत ॥१०॥

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह॥**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥११॥**

पदार्थः–

यः पुरुषः; विद्यां चाविद्यां चोभयं फलभेदतः वेद–वेत्ति सः पुरुषः ह–निश्चये; अविद्यया सात्त्विककर्मलक्षणया मृत्युं–चित्त

मृत्युं तीर्त्वा-उल्लङ्घ्य, विद्यया-विवेकप्रत्ययलक्षणया; अमृतं-जनिमृतिशून्यमात्मतत्त्वं; अश्नुते-अनुभवति ॥

अथ भाष्यम्:-

योहि पुरुषो विद्याकर्मणोः क्रमसमुच्चयं जानाति स कर्मणा चित्त-शुद्धिं सम्पाद्य विद्ययाऽऽत्मानं साक्षात्करोति ॥ ११ ॥

गतमन्त्रस्य योगानुष्ठाने तात्पर्यमिति स्पष्टम् । अथ योगमार्ग-क्षुण्णता कुत्र भेतव्यं तद्दर्शयति:-

अन्धंतमः प्रविशन्तियेऽसंभूतिमुपासते ॥
ततो भूय इव ते तमो य उ संभूत्या~रताः ॥१२॥

पदार्थः-

ये-योगिनोऽलब्धतुरीयतत्त्वा असंभूतिं-प्रकृतिं रम्यामुपासन्त-स्तत्र रम्यन्ते ते अन्धं तमः-अदर्शनात्मकं तमः प्रविशन्ति । अज्ञाने प्रसज्जन्ति । ये उ-येपुनः, संभूत्या-प्रकृतिविकारे कस्मिंश्चित् प्रतिनि-विष्टात्ममनसा रताः-रम्यन्ते ते ततः-प्रकृत्युपासकादपि भूय इव तमः-गाढतरं तम प्रविशन्ति । कार्ये सक्तत्वात् ॥

अथ भाष्यम्:-

ये पुरुषा अलब्धसमाधिप्रत्ययाः प्रकृतिमेव तत्त्वमुद्दयोपासन्तो रमन्ते, ते तत्र सक्ताश्चिरम्यन्ते । आधुनिकवैज्ञानिकास्तावदस्य-दृष्टान्ताः । ते हि प्रकृतितत्त्वं पारयिष्यवः प्रकृतिचिन्तने सुष्ठा जीवना-

वसाने प्रकृतिवासितान्तःकरणाः प्रकृतावेव लयं यान्ति । भवप्रत्ययोऽयं निरोधः । अतः सूचना श्रुतेः । न त्वयं भवप्रत्ययोऽसम्प्रज्ञातः सेव्योऽपित्वुपायप्रत्ययः । ये पुनः प्रकृतिविकार एव तत्त्वबुद्ध्यासक्तास्ते विकारेषु प्रलयं यान्ति । कारणदृष्ट्या कार्यस्यस्थौल्यादज्ञानान्धकारस्यापिगाढतरत्वं युक्तम् । अतो न योगिना विरक्तव्यमात्मोपलब्धेरिति भावः । उक्तं हि भगवता यदुनन्दनेन–

**यं यं वाऽपिस्मरन्भावं त्यजत्यन्ते कलेवरम् ॥**
**तंतमेवैति कौन्तेय! सदा तद्भावभावितः ॥**

इति । भावनानुकूला हि स्थावरान्तागतिः ॥ १२ ॥

प्रकृतिविकृत्युपासितफलभेदं विवृणुते–

**अन्यदेवाहुः संभवादन्यदाहुरसंभवात् ॥**
**इति शुश्रुम धीराणां येनस्तद्विचचक्षिरे ॥ १३ ॥**

पदार्थः–

संभवासंभवपदयोर्व्युत्पत्त्या यथासङ्ख्यं विकृतिप्रकृतिपरत्वं ज्ञेयम् । व्याख्यातपूर्वं शेषम् ॥

अथ भाष्यम्ः–

अनयोरुपास्त्योः फलभेदं योगनिष्ठा महर्षयः प्राहुः । तमिमं फलभेदं विचार्य मुमुक्षुणा वर्तितव्यम् ॥ १३ ॥

अथोपासितफलं कथं तत्त्वज्ञान उपकारकं स्यात्तद्दर्शयति–

**संभूतिं च विनाशं च यस्तद्वेदोभयं सह ॥**
**विनाशेन मृत्युं तीर्त्वाऽसंभूत्याऽमृतमश्नुते ॥१४॥**

पदार्थः–

यः, सम्भूतिं–प्रकृतिं, अकारच्युतिरत्र लेखकप्रमाददोषाद्विज्ञेया। सा चानुसन्धेया। च विनाशं–कार्याणां विनाशित्वात् कार्यं च वेद–वेत्ति सफलम्। स–स योगी, ह–निश्चये, विनाशेन–कार्योपार्जितज्ञानफलेन त्यागात्मकेन मृत्युं–अविद्यालक्षणां चित्ताशुद्धिं तीर्त्वा–उल्लङ्घ्य, असंभूत्या=असम्भूत्युपास्त्युपपन्नफलेन परविरागानधिकेन, अमृतमात्मानमश्नुते ॥

अथ भाष्यम्:–

यो हि पुरुषः प्रकृतिं सविकारामुपास्य तत्र विरज्यते स शुद्धः सन् परात्परं पुरुषं विन्दते ॥ १४ ॥

प्रकृतिजयनिकामेद्धो न भवति कृतेऽनन्यभक्ते। भक्तितुष्टो हि परमात्मा क्षिप्रमेव योगिनमनुगृह्णाति। कर्मज्ञानसत्त्वेऽपि भक्तिरस विना न विलीनात्यस्मिता। अत शुद्धहृदयेन सत्यदर्शनैकलालस परमात्मानं स्तुत्यादनया विधयेति स्तौति —

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥**

पदार्थः—

हे पूषन्!–हे जगत्पोषक! हे भक्तिरसायनेनात्मपोषक! सत्यस्य तव परमात्मन मुखं–निजस्वरूपं हिरण्मयेन पात्रेण–प्रकृतेरविद्वेदी-

प्यमानेन ख्यातिरूपेण पात्रेण हढीभूतेन; अपिहितं–तिरोहितं वर्तते तत्–पात्रं त्वं भक्तवत्सलः; सत्यधर्माय–सत्यार्थं कृतधर्मणे–कर्मणे मह्यं –मम दृष्टये–दर्शनाय; अपावृणु–अपसारय ॥

अथ भाष्यम्:—

उपायप्रत्ययो योगी विवेकख्यातिं लब्ध्वा तस्या अपि निरुन्धनाय परमात्मानं प्रार्थयते । नहि ऋते भक्तेस्तत्त्वतईश्वरदर्शनं भवति । अतः स्तौति हे पूषन् ! मम दर्शनाय तवमुखोपरि वर्तमानं हिरण्मयं पात्रं त्वं दययाऽपाकुरु। न विना त्वत्प्रसादं मे सामर्थ्यं प्रकृतेरन्तिमामङ्गुलिं ख्यातिरूपां त्यक्तुम् । अतः कुरुदयाम् ॥ १५ ॥

भावातिशयेन भक्तवशो भवति परमात्मा । अतो भूयोऽपि तं प्रेमैकहार्देन प्रार्थयते ।—

**पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन्**
**समूह तेजः ।**
**यत्तेरूपं कल्याणतमं तत्तेपश्यामि योऽसावसौ**
**पुरुषः सोऽहमस्मि ॥ १६**

पदार्थः–

हे पूषन् !–जगत्पोषक ! एकर्षे !–अनन्यद्रष्टः ! हे यमः–अन्तर्यामिन् ! सूर्य्य–विद्वत्प्राप्य ! प्राजापत्य–आचवितः ! तव रश्मीन् कृपारश्मीन् मयि व्यूह–विशेषेण संयोजय । तवतेजः–ममाज्ञानदाहं तवतेजः समूह–मय्येकीकुरु । यत् ते–यत् तव; रूपं कल्याणतमं

भद्रतम–मङ्गलतम स्यात् । तत् ते–तव प्रसादात् पश्यामि–पश्येयम् । य असौ असौ पुरुष सोऽहमस्मि–वीप्सा स्नेहातिशयव्यञ्जिका । योऽसावनादितस्त्वत्तो वियुक्त पुरुष सोऽहमस्म्यद्य त्वा प्रपन्न । अतो मयि दयय ॥ १६ ॥

अथ भाष्यम्ः—

आर्तनादपुरस्सर परात्मान स्तूयात् । भक्त्यावर्जित स स्वरूप प्रदर्शयति । अत साधकस्तस्मात्मनो विशेषपरिचय ददाति । हे परम पित । सर्वज्ञोऽसि तथापि विज्ञापयामि वा । अह सो यस्त्वत्तो वियोजित । सोऽह त्वा लब्धस्मृतिरद्यप्रपन्न । कृपयाधुनामामुद्धर ॥ १७ ॥

भक्तिरसनिमज्जनशीलेन त्वया तदाऽपर किं ध्येयम्–

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ॥
ॐक्रतो ! स्मर कृतंस्मर ! क्रतो ! स्मर ! कृतंस्मर !॥१८॥

पदार्थः—

वायु –वैयक्तिक मम जीवनम्, अमृतमनिलम्–परमात्मजीवन भविष्यति । अथ–अपीद शरीर भस्मान्तमस्त्येव । अत हे क्रतो–हे प्रज्ञाजीविजीव ! ॐ–परमात्मान स्मर ! कृत–कर्मणाकृतमिद शरीर स्मर । अनयोर्विवेक कुरु । उदितविवेकश्च परमात्मानमेव स्मर, कृत–तव कर्माणि च स्मर ।

अथ भाष्यम् —

हे जीव ! तवजीवन परमात्मरूपममृत जीवन प्राप्स्यति । देहार्थ

चेदुत्तम्यसि ? मुधा मा तत्र रतिं कृथाः । यतो भस्मान्तमेव शरीरम् ।
अतएव श्रद्धाजीविन् ! परमात्मानं स्मर । स्मरणेऽपि चेद्विलम्बः स्यात्
तस्यप्राप्तौ भ्रमय निजकर्म । शोधय चित्तम् । तदर्थमसकृत्संस्मर । एवं
करणात्तवप्रयोजनं सेत्स्यति ॥ १८ ॥

एवं परमात्मप्राप्तिं ध्रुवां प्रदर्श्योपेयादुपाय एव सततं दृष्टि-
तव्येति दृष्ट्वा सदैव सन्मार्गगमनाय परमात्मानं प्रार्थयित्वोपसंहरति—

अग्ने ! नय सुपथा रायेऽस्मान्विश्वानि देव ! वयु-
नानि विद्वान् ॥
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं
विधेम ॥ १९ ॥

हे जगद्गुरो परमात्मन् ! त्वमस्माकम् । त्वमेव नयनाथ योग्यः ।
त्वं सर्वज्ञः सर्वशक्तिमान् । दीर्घश्चाधा । कुटिलाश्च वयम् ।
त्स्वप्राप्तिमार्गं संक्षेपय । किंकृत्वा । अस्मत्तः पापकर्माणि कुटि-
योजयित्वा । अस्मान् शुद्धान् कृत्वोत्सङ्गे तव निरामये तल्लय
पोषयेति । वाग्यज्ञेन वयं त्वा समर्चयामहे । अकिञ्चनेभ्यः
ामी किमपरं लभेत ? । अतोवाक्सपर्यां स्वीकुर्विति ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
। ॐ शान्तिः शान्तिः शान्तिः ।

यदत्रशुद्धं प्रतिभाप्रसूतं
गुरोर्दया तन्न मम, प्रमेयम् ॥
अनासताऽपादकमत्रयच्च
ममैवतज्ज्ञेयमुदारसत्त्वैः ॥ १ ॥
विभूतस्थितोदेवो वन्दितः प्रेमभावतः ॥
ग्यज्ञेनार्चितोऽनेन प्रीयतां मे हरिर्गुरुः ॥ २ ॥

सिश्री न्यग्रोधपुर (वल्साड) वास्तव्य, भट्टोपाह्वमणिशङ्करात्मज
लिनशर्मणा, एम० ए० पदवीधारिणा, विरचितमीशोपनिषद्-
भाष्यं संपूर्णम् ।

॥ हरिः ॐ तत्सत् ॥